॥ श्रीविष्णुस्तवनं मार्कण्डेयप्रोक्तं नरसिंहपुराणे ॥

व्यास उवाच --
प्रणिपत्य जगन्नाथं चराचरगुरुं हरिम् ।
मार्कण्डेयोऽभितुष्टाव भोगपर्यङ्कशायिनम् ॥ १॥

मार्कण्डेय उवाच --
प्रसीद भगवन् विष्णो प्रसीद पुरुषोत्तम ।
प्रसीद देवदेवेश प्रसीद गरुडध्वज ॥ २॥

प्रसीद विष्णो लक्ष्मीश प्रसीद धरणीधर ।
प्रसीद लोकनाथाद्य प्रसीद परमेश्वर ॥ ३॥

प्रसीद सर्वदेवेश प्रसीद कमलेक्षण ।
प्रसीद मन्दरधर प्रसीद मधुसूदन ॥ ४॥

प्रसीद सुभगाकान्त प्रसीद भुवनाधिप ।
प्रसीदाद्य महादेव प्रसीद मम केशव ॥ ५॥

जय कृष्ण जयाचिन्त्य जय विष्णो जयाव्यय ।
जय विश्व जयाव्यक्त जय विष्णो नमोऽस्तु ते ॥ ६॥

जय देव जयाजेय जय सत्य जयाक्षर ।
जय काल जयेशान जय सर्व नमोऽस्तु ते ॥ ७॥

जय यज्ञपते नाथ जय विश्वपते विभो ।
जय भूतपते नाथ जय सर्वपते विभो ॥ ८॥

जय विश्वपते नाथ जय दक्ष नमोऽस्तु ते ।
जय पापहरानन्त जय जन्मजरापह ॥ ९॥

जय भद्रातिभद्रेश जय भद्र नमोऽस्तु ते ।
जय कामद काकुत्स्थ जय मानद माधव ॥ १०॥

जय शंकर देवेश जय श्रीश नमोऽस्तु ते ।
जय कुङ्कुमरक्ताभ जय पङ्कजलोचन ॥ ११॥

जय चन्दनलिप्ताङ्ग जय राम नमोऽस्तु ते ।

जय देव जगन्नाथ जय देवकिनन्दन ॥ १२॥

जय सर्वगुरो ज्ञेय जय शम्भो नमोऽस्तु ते ।
जय सुन्दर पद्माभ जय सुन्दरिवल्लभ ।
जय सुन्दरसर्वाङ्ग जय वन्द्य नमोऽस्तु ते ॥ १३॥

जय सर्वद सर्वेश जय शर्मद शाश्वत ।
जय कामद भक्तानां प्रभविष्णो नमोऽस्तु ते ॥ १४॥

नमः कमलनाभाय नमः कमलमालिने ।
लोकनाथ नमस्तेऽस्तु वीरभद्र नमोऽस्तु ते ॥ १५॥

नमस्त्रैलोक्यनाथाय चतुर्मूर्ते जगत्पते ।
नमो देवाधिदेवाय नमो नारायणाय ते ॥ १६॥

नमस्ते वासुदेवाय नमस्ते पीतवाससे ।
नमस्ते नरसिंहाय नमस्ते शार्ङ्गधारिणे ॥ १७॥

नमः कृष्णाय रामाय नमश्चक्रायुधाय च ।
नमः शिवाय देवाय नमस्ते भुवनेश्वर ॥ १८॥

नमो वेदान्तवेद्याय नमोऽनन्ताय विष्णवे ।
नमस्ते सकलाध्यक्ष नमस्ते श्रीधराच्युत ॥ १९॥

लोकाध्यक्ष जगत्पूज्य परमात्मन् नमोऽस्तु ते ।
त्वं माता सर्वलोकानां त्वमेव जगतः पिता ॥ २०॥

त्वमार्तानां सुहृन्मित्रं प्रियस्त्वं प्रपितामहः ।
त्वं गुरुस्त्वं गतिः साक्षी त्वं पतिस्त्वं परायणः ॥ २१॥

त्वं ध्रुवस्त्वं वषट्कर्ता त्वं हविस्त्वं हुताशनः ।
त्वं शिवस्त्वं वसुर्धाता त्वं ब्रह्मा त्वं सुरेश्वरः ॥ २२॥

त्वं यमस्त्वं रविर्वायुस्त्वं जलं त्वं धनेश्वरः ।
त्वं मनुस्त्वमहोरात्रं त्वं निशा त्वं निशाकरः ।
त्वं धृतिस्त्वं श्रियः कान्तिस्त्वं क्षमा त्वं धराधरः ॥ २३॥

त्वं कर्ता जगतामीशस्त्वं हन्ता मधुसूदन ।

त्वमेव गोप्ता सर्वस्य जगतस्त्वं चराचर ॥ २४॥

करणं कारणं कर्ता त्वमेव परमेश्वरः ।
शङ्खचक्रगदापाणे भो समुद्धर माधव ॥ २५॥

प्रिय पद्मपलाशाक्ष शेषपर्यङ्कशायिनम् ।
त्वामेव भक्त्या सततं नमामि पुरुषोत्तमम् ॥ २६॥

श्रीवत्साङ्कं जगद्बीजं श्यामलं कमलेक्षणम् ।
नमामि ते वपुर्देव कलिकल्मषनाशनम् ॥ २७॥

लक्ष्मीधरमुदाराङ्गं दिव्यमालाविभूषितम् ।
चारूपृष्ठं महाबाहुं चारुभूषणभूषितम् ॥ २८॥

पद्मनाभं विशालाक्षं पद्मपत्रनिभेक्षणम् ।
दीर्घतुङ्गमहाघ्राणं नीलजीमूतसंनिभम् ॥ २९॥

दीर्घबाहुं सुगुप्ताङ्गं रत्नहारोज्ज्वलोरसम् ।
सुभ्रूललाटमुकुटं स्निग्धदन्तं सुलोचनम् ॥ ३०॥

चारुबाहुं सुताम्रोष्ठं रत्नोज्ज्वलितकुण्डलम् ।
वृत्तकण्ठं सुपीनांसं सरसं श्रीधरं हरिम् ॥ ३१॥

सुकुमारमजं नित्यं नीलकुञ्चितमूर्धजम् ।
उन्नतांसं महोरस्कं कर्णान्तायतलोचनम् ॥ ३२॥

हेमारविन्दवदनमिन्दिरायनमीश्वरम् ।
सर्वलोकविधातारं सर्वपापहरं हरिम् ॥ ३३॥

सर्वलक्षणसम्पन्नं सर्वसत्त्वमनोरमम् ।
विष्णुमच्युतमीशानमनन्तं पुरुषोत्तमम् ॥ ३४॥

नतोऽस्मि मनसा नित्यं नारायणमनामयम् ।
वरदं कामदं कान्तमनन्तं सूनृतं शिवम् ॥ ३५॥

नमामि शिरसा विष्णो सदा त्वां भक्तवत्सल ।
अस्मिन्नेकार्णवे घोरे वायुस्कम्पितचञ्चले ॥ ३६॥

अनन्तभोगशयने सहस्रफणशोभिते ।
विचित्रशयने रम्ये सेविते मन्दवायुना ॥ ३७॥

भुजपञ्जरसंसक्तकमलालयसेवितम् ।
इह त्वां मनसा सर्वमिदानीं दृष्टवानहम् ॥ ३८॥

इदानीं तु सुदुःखार्थो मायया तव मोहितः ।
एकोदके निरालम्बे नष्टस्थावरजङ्गमे ॥ ३९॥

शून्ये तमसि दुष्पारे दुःखपङ्के निरामये ।
शीतातपजरारोगशोकतृष्णादिभिः सदा ॥ ४०॥

पीडितोऽस्मि भृशं तात सुचिरं कालमच्युत ।
शोकमोहग्रहग्रस्तो विचरन् भवसागरे ॥ ४१॥

इहाद्य विधिना प्राप्तस्तव पादाब्जसंनिधौ ।
एकार्णवे महाघोरे दुस्तरे दुःखपीडितः ॥ ४२॥

चिरभ्रमपरिश्रान्तस्त्वामद्य शरणं गतः ।
प्रसीद सुमहामाय विष्णो राजीवलोचन ॥ ४३॥

विश्वयोने विशालाक्ष विश्वात्मन् विश्वसम्भव ।
अनन्यशरणं प्राप्तमतोऽत्र कुलनन्दन ॥ ४४॥

त्राहि मां कृपया कृष्ण शरणागतमातुरम् ।
नमस्ते पुण्डरीकाक्ष पुराणपुरुषोत्तम ॥ ४५॥

अञ्जनाभ हृषीकेश मायामय नमोऽस्तु ते ।
मामुद्धर महाबाहो मग्ने संसारसागरे ॥ ४६॥

गह्वरे दुस्तरे दुःखक्लिष्टे क्लेशमहाग्रहैः ।
अनाथं कृपणं दीनं पतितं भवसागरे ।
मां समुद्धर गोविन्द वरदेश नमोऽस्तु ते ॥ ४७॥

नमस्त्रैलोक्यनाथाय हरये भूधराय च ।
देवदेव नमस्तेऽस्तु श्रीवल्लभ नमोऽस्तु ते ॥ ४८॥

कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भवान् ।

संसारार्णवमग्नानां प्रसीद मधुसूदन ॥ ४९॥

त्वामेकमाद्यं पुरुषं पुराणं जगत्पतिं कारणमच्युतं प्रभुम् ।
जनार्दनं जन्मजरार्तिनाशनं सुरेश्वरं सुन्दरमिन्दिरापतिम् ॥ ५०॥

बृहद्भुजं श्यामलकोमलं शुभं वराननं वारिजपत्रनेत्रम् ।
तरंगभङ्गायतकुन्तलं हरिं सुकान्तमीशं प्रणतोऽस्मि शाश्वतम् ॥ ५१॥

सा जिह्वा या हरिं स्तौति तच्चित्तं यत्त्वदर्पितम् ।
तावेव केवलौ श्लाघ्यौ यौ त्वत्पूजाकरौ करौ ॥ ५२॥

जन्मान्तरसहस्रेषु यन्मया पातकं कृतम् ।
तन्मे हर त्वं गोविन्द वासुदेवेति कीर्तनात् ॥ ५३॥

व्यास उवाच --
इति स्तुतस्ततो विष्णुर्मार्कण्डेयेन धीमता ।
संतुष्टः प्राह विश्वात्मा तं मुनिं गरुडध्वजः ॥ ५४॥

श्रीभगवानुवाच --
प्रीतोऽस्मि तपसा विप्र स्तुत्या च भृगुनन्दन ।
वरं वृणीष्व भद्रं ते प्रार्थितं दद्मि ते वरम् ॥ ५५॥

मार्कण्डेय उवाच --
त्वत्पादपद्मे देवेश भक्तिं मे देहि सर्वदा ।
यदि तुष्टो ममाद्य त्वमन्यदेकं वृणोम्यहम् ॥ ५६॥

स्तोत्रेणानेन देवेश यस्त्वां स्तोष्यति नित्यशः ।
स्वलोकवसतिं तस्य देहि देव जगत्पते ॥ ५७॥

दीर्घायुष्ट्वं तु यद्दत्तं त्वया मे तप्यतः पुरा ।
तत्सर्वं सफलं जातमिदानीं तव दर्शनात् ॥ ५८॥

वस्तुमिच्छामि देवेश तव पादाब्जमर्चयन् ।
अत्रैव भगवन् नित्यं जन्ममृत्युविवर्जितः ॥ ५९॥

श्रीभगवानुवाच --
मय्यस्तु ते भृगुश्रेष्ठ भक्तिरव्यभिचारिणी ।
भक्त्या मुक्तिर्भवत्येव तव कालेन सत्तम ॥ ६०॥

यस्त्विदं पठते स्तोत्रं सायं प्रातस्तवेरितम् ।
मयि भक्तिं दृढां कृत्वा मम लोके स मोदते ॥ ६१॥

यत्र यत्र भृगुश्रेष्ठ स्थितस्त्वं मां स्मरिष्यसि ।
तत्र तत्र समेष्यामि दान्तो भक्तवशोऽस्मि भोः ॥ ६२॥

व्यास उवाच --
इत्युक्त्वा तं मुनिश्रेष्ठं मार्कण्डेयं स माधवः ।
विरराम स सर्वत्र पश्यन् विष्णुं यतस्ततः ॥ ६३॥

इति ते कथितं विप्र चरितं तस्य धीमतः ।
मार्कण्डेयस्य च मुनेस्तेनैवोक्तं पुरा मम ॥ ६४॥

ये विष्णुभक्त्या चरितं पुराणं भृगोस्तु पौत्रस्य पठन्ति नित्यम् ।
ते मुक्तपापा नरसिंहलोके वसन्ति भक्तैरभिपूज्यमानाः ॥ ६५॥

इति श्रीनरसिंहपुराणे मार्कण्डेयचरितं नाम एकादशोऽध्यायः ॥ ११॥